श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीनयिनाराचार्य विरचितम्

# ॥ श्रीमद्वेदान्तदेशिक प्रार्थनाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

# ॥ श्रीमद्वेदान्तदेशिक प्रार्थनाष्टकम् ॥

श्रीमल्लक्ष्मण योगीन्द्र सिद्धान्त विजयध्वजम्।
विश्वामित्र कुलोद्भूतं वरदार्यमहं भजे॥

त्रयीचूडागुरो स्वामिन् कृपाम्भोराशिना त्वया।
विज्ञापनं मामकीनं श्रोतव्यं श्रितवत्सल॥ १ ॥

त्रय्यन्तार्य भवत्पादपङ्केरुहजुषां सताम्।
स्वयं मयि सदा भूयादनुग्रह परंपरा॥ २ ॥

श्रीसंयमीन्द्र सिद्धान्त निधिरक्षैक दीक्षित।
नियतं कुरु दासं मां सर्वतन्त्रस्वतन्त्र ते॥ ३ ॥

ज्ञानभक्त्यादि सत्संपत्प्रदायिन्याऽनुकंपया।
स्यादसाविति वीक्षस्व वेदांताचार्यवर्य माम्॥ ४ ॥

श्री वेङ्कटेश घण्टात्मन् यतींद्र शठजित्प्रिय।
रहस्यत्रयसारोक्त निष्ठां श्रेष्ठां प्रयच्छ मे॥ ५ ॥

त्वत्कृतिष्वागमान्तार्य सम्यक्कृतपरिश्रमैः।
नित्ययोगो महाभागैः त्वदेकान्तिभिरस्तु नः॥ ६ ॥

कदापि क्वापि केनापि कवितार्किकसिंह माम्।
श्रीकान्ततत्पराचार्येष्वप्रसक्तागसं कुरु॥ ७ ॥

श्रीमद्वेङ्कटनाथार्य त्वदीयचरणद्वयम्।
भवत्वत्र परत्रापि मदीयं शरणं सदा॥ ८ ॥

सादरं व्याहरन्नेतत् प्रत्यहं प्रार्थनाष्टकम्।
वेदान्ताचार्य पादाब्ज भक्तिरत्ना करो भवेत्॥ ९ ॥

जयति श्रुतिचूडार्यः श्रीमानद्भुतचंद्रमाः।
सकला यत्र हि कलाः निर्मला नित्यपुष्कलाः॥ १० ॥

॥ इति श्रीमद्वेदान्तदेशिक प्रार्थनाष्टकम् समाप्तम् ॥